दुःखितेन दुष्करं चरन्तेन तृणसंस्तरकेन लूहाहारेण अहमिह राजकुले राजार्हाणि भोजनानि भुंजेयं राजारहाणि पानानि पिबेयं राजार्हाणि वस्त्राणि धारयेयं राजार्हाणि शय्यासनानि कल्पयेयं। यं नूनाहं पि लूखं च आहारं आहरेयं प्राकृतानि च वस्त्राणि धारयेयं आहरेसि तृणसंस्तरे पि शय्यां कल्पयेयं। सा दानि लूखं च आहारं प्राकृतानि पि वस्त्राणि धारयेसि तृणसंस्तरके पि शय्यां कल्पयेसि।

यदा च भगवां प्रवृत्तप्रवरधर्मचक्रो राजगृहे विहरति अर्धत्रयोदशभिक्षुशतपरिवारितो तदा राज्ञा शुद्धोदनेन च्छन्दको च कालोदायी च राजगृहं प्रेषिता भगवतो दूता। अनुकम्पिता भगवता देवा मनुष्या च, ज्ञाती पि भगवाननुकंपतु। यं च भगवां वदेय्य तं करेथ। तेपि कपिलवस्तुनो राजगृहमनुप्राप्ता भगवन्तं च उपसंक्रान्ता यं च राज्ञो शुद्धोदनस्य संदेशं सर्वस्य ज्ञातिवर्गस्य तं सर्वं भगवतो आरोचितं। भगवां च कालज्ञो वेलज्ञो समयज्ञो, कालं च वेलं समयं च आगमयति जातिभूमिं गमनाये। भगवा छन्दक कालोदायीनामन्त्रयति। प्रव्रजिष्यथ च्छन्दक कालोदायी। ते अवचंसु। राज्ञा शुद्धोदनेन आणत्ता यं वो भगवां वदेय्य तं कुर्याथ। यं च पश्यन्ति नाप्यत्र नापितो नापि काषायाणि (२३४) येहि

---

আর্যপুত্র (স্বামী) দুষ্কর তপস্যা করিয়া তৃণাস্তরণে শয়নপূর্বক রুক্ষ বা নিকৃষ্ট আহার্য দ্রব্য গ্রহণ করিয়া দুঃখ পাইতেছেন, তখন আমি এই রাজবাড়ীতে রাজযোগ্য ভোজন আহার করিতেছি, রাজযোগ্য পানীয় দ্রব্য পান করিতেছি। তাই নিশ্চিতই আমি রুক্ষ বা নিকৃষ্ট আহার্য ভোজন করিব, প্রাকৃত বা সাধারণলোকের ব্যবহার্য বস্ত্র ধারণ করিব। এবং তৃণাস্তরণে শয্যা রচনা করিব। তৎপর তিনি রুক্ষ বা নিকৃষ্ট আহার ভোজন করিতে লাগিলেন, প্রাকৃতজনোচিত বস্ত্র ধারণ করিতে লাগিলেন এবং তৃণসংস্তরণে শয্যা রচনা করিতে লাগিলেন"। যখন ভগবান্ শ্রেষ্ঠ ধর্মচক্র প্রবর্তন করিবার পরে, রাজগৃহে সার্ধ ত্রয়োদশ-শত ভিক্ষুদ্বারা পরিবেষ্টিত ছিলেন, তখন ছন্দক ও কালোদায়ী (এক রাজমন্ত্রীর পুত্র) রাজগৃহে (রাজকর্তৃক) দূতরূপে প্রেরিত হইয়াছিল। (রাজা বলিয়া দিয়াছিলেন—) "ভগবান্ দেব ও মনুষ্যদিগকে অনুকম্পা দেখাইয়াছেন, (এখন) জ্ঞাতিদিগকেও ভগবান্ অনুকম্পা দেখান। ভগবান্ তোমাদিগকে যাহা বলিবেন তোমরা তাহা করিবে"। তাহারাও কপিলবস্তু হইতে রাজগৃহে চলিয়া গেল এবং ভগবানের নিকট উপস্থিত হইয়া রাজা শুদ্ধোদন ও জ্ঞাতিবর্গ যে সংবাদ পাঠাইয়াছেন সেই সকল ভগবানের নিকট নিবেদন করিল। ভগবান্ কিন্তু কাল, বেলা ও সময় জানিতেন; তিনি জন্মভূমিতে যাওয়ার কাল, বেলা ও সময় আসিয়াছে বলিয়া বুঝিলেন। ভগবান্ ছন্দক ও কালোদায়ীকে ডাকিয়া বলিলেন—"হে ছন্দক ও কালোদায়িন্! তোমরা কি প্রব্রজ্যা বা সন্ন্যাস অবলম্বন করিবে?" তাহারা বলিল—"আমরা রাজা শুদ্ধোদনদ্বারা আজ্ঞপ্ত হইয়াছি—'ভগবান্ যাহা বলিবেন তোমরা তাহাই করিবে'। যেমন দেখা যাইতেছে এখানে (মস্তকমুণ্ডনার্থ) কোন নাপিতও নাই, কোন কাষায় বস্ত্রও নাই (২৩৪) যদ্দ্বারা

प्रावृता प्रव्रजेयामः। ते भगवन्तमनुवर्तन्ता आहन्सुः। प्रव्रजिष्यामः भगवन्। ते दानि भगवता एहिभिक्षुकाय आभाष्टा। एहथ भिक्षवः छन्दककालोदायी चरथ तथागते ब्रह्मचर्यं। तेषा दानि भगवता एहिभिक्षुकाये आभाष्टाना यं किंचिद् गृहिलिंगं गृहिध्वज गृहिगुप्ति गृहिकल्प सर्वं समन्तरहित, त्रिचीवरा च प्रादुर्भूता, सम्भृत च पात्रं, प्रकृतिस्वभावसस्थिता च केशा ईर्यापथो च सानं संस्थिहे तद्यथापि नाम वर्षशतोपसम्पन्नाना भिक्षूणा एषा आयुष्मन्ताना छन्दक-कालोदायिना प्रव्रज्या उपसम्पदा भिक्षुभावो।

आयुष्मा उदायी भगवन्तमाह। भगवं यशोधरा भगवतो अनुव्रता, भगवतो तपोवने दुष्करं चरन्तस्य यशोधरापि लूखं आहारमाहरेहि प्राकृतानि च वस्त्राणि धारेसि राजारहाणि शय्यासनानि उत्सृज्य तृणसंस्तरके सेय्या कल्पेसि। भिक्षू भगवन्तं पृच्छन्ति। कथं भगव यशोधरा भगवतो अनुव्रता। भगवानाह। न भिक्षवो एतर्हि एव यशोधरा मम अनुव्रता। अन्यदापि यशोधरा मम अनुव्रता। भिक्षू आहन्सुः। अन्यदापि भगवं। भगवानाह। अन्यदापि हि भिक्षवो।

---

প্রাবৃত হইয়া আমরা প্রব্রজ্যা গ্রহণ করিব"। তাহারা ভগবানের বাক্য অনুবর্তন করিয়া বলিল—"হে ভগবন্, আমরা প্রব্রজ্যা গ্রহণ করিব"। তখন তাহাদিগকে ভগবান্ "এস ভিক্ষুগণ" এই মন্ত্র বলিয়া আভাষণ দিলেন, এবং (আরও বলিলেন—) "এস ভিক্ষু ছন্দক, এস ভিক্ষু কালোদায়ী, তথাগতের অধীন হইয়া ব্রহ্মচর্য আচরণ কর"। তারপর ভগবান্ তাহাদিগকে 'এহি ভিক্ষু—এস ভিক্ষু' বলিয়া সম্বোধন করিলে পর, (তাহাদের গাত্র হইতে) গৃহীর বা গৃহস্থের যে-সব লিঙ্গ (চিহ্ন), ধ্বজা (লক্ষণ বা লাঞ্ছন), গুপ্তি (রক্ষাকবচাদি) ও কল্প (নিয়ম) সবই একবারে অন্তর্হিত হইল এবং তিন চীবর (ভিক্ষুর কাষায় বস্ত্র) প্রাদুর্ভূত হইল, একটি পাত্র উপস্থিত হইল এবং তাহাদের কেশরাশি আপনিই (মস্তকে) স্বভাবসংস্থিত হইল এবং তাহাদের ঈর্যাপথও (গমন, দাঁড়ান, উপবেশন ও শয়নরূপ চারিপ্রকার শরীরাবস্থানও) সংস্থিত হইল—যেমন, শতবৎসর ব্যাপিয়া উপসম্পদা বা দীক্ষাপ্রাপ্ত ভিক্ষুদিগের ন্যায় আয়ুষ্মান্ ছন্দক ও কালোদায়ীরও প্রব্রজ্যা, উপসম্পদা (দীক্ষা) ও ভিক্ষুভাব বিহিত হইল।

আয়ুষ্মান্ উদায়ী ভগবানকে বলিল—"হে ভগবন্! যশোধরা ভগবানের অনুব্রতা (সমব্রতধারিণী) আছেন; ভগবান্ তপোবনে দুষ্কর তপস্যা আচরণ করিতে থাকিলে, যশোধরাও রূক্ষ (নিকৃষ্ট) আহার্য আহার করিতেন, প্রাকৃত (বা সাধারণ-জনোচিত) বস্ত্র ধারণ করিতেন, রাজোপযুক্ত শয্যা ও আসন ত্যাগ করিয়া তিনি তৃণ-সংস্তরণে শয্যা রচনা করিতেন"। ভিক্ষুগণ ভগবানকে জিজ্ঞাসা করিলেন—"হে ভগবন্! কিপ্রকারে যশোধরা ভগবানের অনুব্রতা হইলেন"। ভগবান বলিলেন—"হে ভিক্ষুগণ! এইবারই যশোধরা আমার অনুব্রতা হয় নাই; অন্য এক সময়েও

भूतपूर्व भिक्षवो अतीतमध्वाने अन्यतरस्मिं अरण्यायतने शिरिप्रभो नाम मृगो प्रतिवसति प्रासादिको दर्शनीयो सुसंस्थितशरीरो रक्तेहि खुरेहि रक्तेहि पादेहि अंजितेहि अक्षीहि पंचशतमृगयूथं परिहरति। तस्य दानि मृगराज्ञो अग्रमहिषी। सा तस्य प्रभावानुरक्ता अनुव्रता च। तेन मृगेण मुहूर्तमपि विनाभावो न भवति। अपरो च नीलको नाम लुब्धको। तेन तहिं अरण्यायतने मृगाणां (२३५) पाशा ओड्डिता। सो शिरिप्रभो तेन महन्तेन मृगयूथेन संपरिवारितो तहिं अरण्यायतने चरमानो बद्धो। सर्वे च मृगा च मृगी च मृगराजं बद्धं दृष्ट्वा पलाना, एका मृगी या तस्य मृगराज्ञो भक्तिमन्ता च अनुव्रता सा स्थिता न पलायति। सा च मृगी शिरिप्रभं गाथयाध्यभाषे।

विक्रमाहि शिरिप्रभा विक्रमाहि मृगाधिप।
पूरा सो लुब्धको एति येन सो पाशो ओड्डितो।
छिन्दे वारत्रकं पाशं न रमिष्यं त्वया विना।१॥

अथ भिक्षवो शिरिप्रभो मृगराजा तां मृगीं गाथाय प्रत्यभाषे।

---

যশোধরা আমার অনুব্রতা ছিল"। ভিক্ষুরা জিজ্ঞাসা করিলেন—"হে ভগবন্ অন্য এক সময়েও?" ভগবান্ বলিলেন—"হে ভিক্ষুগণ! অন্য এক সময়েও"।

হে ভিক্ষুগণ! অনেক পূর্বে এক অতীত কালে কোন এক বিস্তৃত অরণ্যে শ্রীপ্রভ-নামক এক মৃগ বাস করিত—ইহা প্রসন্নভাবাপন্ন, রমণীয়দর্শন ও সুঠাম শরীরবিশিষ্ট ছিল; ইহার খুরগুলি ও পাদগুলি রক্তবর্ণ ছিল, এবং ইহার লোচনদ্বয় অঞ্জন-লেপযুক্ত ছিল; ইহা পাঁচশত মৃগের এক যূথ বা দলকে পালন বা রক্ষা করিত। সেই মৃগরাজের এক শ্রেষ্ঠ মহিষী ছিল। সে তাহার প্রভাবে অনুরক্ত ছিল, এবং তাহার অনুব্রতধারিণী ছিল। সেই মৃগের সহিত (মৃগীর) মুহূর্তকালও বিনাভাব বা বিরহ (বিচ্ছেদ) হয় নাই। নীলক-নামক কোন এক লুব্ধক বা ব্যাধ ছিল। সেই অরণ্যায়তনে সে মৃগ ধরিবার জন্য (২৩৫) পাশ বা জালসমূহ বিস্তৃতভাবে পাতিয়া রাখিত। সেই শ্রীপ্রভ সেই প্রকাণ্ড মৃগদলদ্বারা পরিবেষ্টিত হইয়া সেই অরণ্যায়তনে চরিতে থাকাকালে (সেই জালে) বন্ধ হইয়া পড়িল। মৃগরাজকে বন্ধ দেখিয়া সব মৃগ ও মৃগীরা পলাইয়া গেল; কেবল যে মৃগটী মৃগরাজের প্রতি ভক্তিমতী ও তাহার অনুব্রতা ছিল,—সে দাঁড়াইয়া রহিল—পলাইয়া গেল না। সেই মৃগটি শ্রীপ্রভকে গাথাদ্বারা বলিতে লাগিল—

হে শ্রীপ্রভ! (পলাইয়া) যাইতে চেষ্টা কর; হে মৃগাধিপ (পলাইয়া) যাইতে চেষ্টা কর। যে লুব্ধক সেই জাল পাতিয়া রাখিয়াছে সেই লুব্ধক সম্মুখে আসিতেছে। এই চর্মরজ্জুনির্মিত পাশ বা জাল ছিঁড়িয়া ফেল। তোমাকে ছাড়া আমার রতি বা সুখ লাগে না॥ ১॥

হে ভিক্ষুগণ! অনন্তর মৃগরাজ শ্রীপ্রভ সেই মৃগীকে গাথাদ্বারা উত্তর প্রদান

विन्नमामि न शक्नोमि भूमौ पतामि वेगिगतो ।
दृढो वारत्नको पाशो पाद मे परिकर्तति ।।२।।
रमणीयान्यारण्यानि पर्वतानि वनानि च ।
रमिष्यसि तुव भद्रे अन्येन पतिना सह ।।३।।
अथ खलु भिक्षवः सा मृगी त मृगराज गाथाय प्रत्यभापति ।
रमणीयान्यरण्यानि पर्वतानि वनानि च ।
रमिष्याम्यह त्वया सार्धं अपि अन्यासु जातिषु ।।४।।
तेषा च विलपन्ताना शुत्वान च विक्रन्दता ।
लुब्धको तत्र सो गच्छि पापकर्मा सुदारुणो ।।५।।

सो दानि मृगराजा त पश्यति लुब्धक तदा दूरतो एव आगच्छन्त कृष्ण पाण्डुरेहि (२३६) दन्तेहि रक्ताक्ष पुरुषादसम नीलाम्बरधर दृष्ट्वा च पुन ता मृगी गाथाय प्रत्यभाषे ।

अय सो लुब्धको एति कृष्णो नीलाम्बरप्रावृतो ।
यो मे चर्म च मान्स च छिन्दित्वा मह्य हनिष्यति ।।६।।

तस्याविदूरे सा मृगी येन सो लुब्धको तेन प्रत्युद्गम्य त लुब्धक गाथाये अध्यभाषे ।

---

করিল—আমি (পলাইতে) চেষ্টা করিতেছি, কিন্তু, পারিতেছি না, বেগ প্রয়োগ করিলে আমি ভূমিতে পড়িয়া যাই। এই দৃঢ় (কঠিন) চর্মনির্মিত পাশ আমার পাদদেশ কাটিয়া ফেলিতেছে॥ ২॥

(এখানে) অরণ্য, পর্বত ও বনসমূহ রমণীয়, হে ভদ্রে! অন্য পতির সহিত তুমি রমণ করিবে॥ ৩॥

হে ভিক্ষুগণ! অতঃপর সেই মৃগী মৃগরাজকে গাথাদ্বারা উত্তর করিল—অরণ্য, পর্বত ও বনসমূহ রমণীয় (বটে), কিন্তু, আমি অন্যান্য জন্মসমূহে তোমার সহিত (এখানে) রমণ করিব॥ ৪॥

সেই পাপকর্মা ও অত্যন্ত কঠিনহৃদয় লুব্ধক তাহাদিগকে বিলাপ ও ক্রন্দন করিতে শুনিয়া সেখানে যাইয়া উপস্থিত হইল॥ ৫॥

তখন সেই মৃগরাজ সেই লুব্ধককে দূরেই আগমন করিতে দেখিতে পাইল—সে দেখিতে কৃষ্ণবর্ণ (২৩৬) তাহার দাঁতগুলি সাদা, চক্ষু রক্তবর্ণ, অন্য পুরুষ হইতে সে বিসদৃশ এবং সে নীলবস্ত্রধারী ছিল,—তাহাকে দেখিয়াই সে পুনরায় সেই মৃগীকে গাথাদ্বারা বলিল—এই সেই কৃষ্ণবর্ণ ও নীলবস্ত্রাবৃতদেহ ব্যাধ আসিতেছে, যে আমার চর্ম ও মাংস ছিন্ন করিয়া আমাকে হত্যা করিবে॥ ৬॥

তাহার নিকটে স্থিত সেই মৃগী যে দিকে সেই লুব্ধক আসিতেছিল সে-দিকে অগ্রসর হইয়া সেই লুব্ধককে গাথাদ্বারা বলিতে লাগিল—

संस्तराहि पलाशानि असिं आवृहि लुब्धक ।
*मम पूर्वं वधित्वान पश्चा हिंसि महामृगं ॥७॥*

अथ खलु भिक्षवो तस्य लुब्धकस्य एतदभूषि । मम दूरतो एव मृगा दृष्ट्वा पलायन्ति अदर्शनं गच्छन्ति, इयं पुनर्मृगी अतीव अनुत्तस्ता आत्मत्यागं कृत्वा अभिमुखी आगच्छति नैषा भायति नापि पलायति। सो दानि लुब्धको तस्या मृगीये विनयं दृष्ट्वा विस्मित आश्चर्य प्राप्तो। यादृशी इयं मृगी। अस्माकं न ते गुणा: ये एतेषां। न ते तिरिच्छा, येषां इमं एदृशं गुणमाहात्म्यं एदृशा दृढचित्तता एदृशा कृतज्ञता एदृशा च अनुव्रतता, मुखतुण्डकेन आहारं पर्येषन्तो, वयं तिरिच्छा ये वयं एदृशं महात्मानं मृगं उपयाता नाम हेठां उत्पादेम। मा वहेष्यं एतं मृगं पाशतो। सो दानि लुब्धको तां मृगीं गाथाये प्रत्यभाषति।

न मे श्रुतं वा दृष्टं वा यं मृगी भाषति मानुषं ।
त्वं च भद्रे सुखी भोहि मुंचामि ते महामृगं ॥८॥

तेन दानि लुब्धकेन सो शिरिप्रभो मृगराजा पाशबद्धो मुक्तो। सा दानि मृगी तं (२३७) मृगराजं मुक्तं दृष्ट्वा आत्तमना प्रमुदिता प्रीतिसौमनस्यजाता लुब्धकं गाथाये प्रत्यभाषे।

---

পত্রসমূহ সংস্তৃত কর (পাতিয়া রাখ); হে লুব্ধক! তোমার অসিখানি (মৃগরাজকে বধ না করিয়া) ঢাকিয়া রাখ। অগ্রে আমাকে বধ করিয়া পরে মহামৃগকে হিংসিত করিও॥ ৭॥

হে ভিক্ষুগণ! অনন্তর সেই লুব্ধকের মনে এই ভাব উদিত হইল—আমাকে দূর হইতে দেখিবামাত্র মৃগেরা পলাইয়া যায় এবং দর্শনপথের বাহিরে চলিয়া যায়, কিন্তু, এই মৃগী অত্যন্ত উৎত্রস্ত না হইয়া নিজকে বলি দিবার উদ্দেশ্যে আমার অভিমুখে আসিতেছে; সে ভয়ও করে না, পলাইয়াও যায় না। তখন সেই লুব্ধক সেই মৃগীর বিনয় বা আত্মসংযম দেখিয়া বিস্মিত হইয়া আশ্চর্যান্বিত হইল। (সে ভাবিল—) "কেমন এই মৃগী! ইহাদের যে-সব গুণ আছে, আমাদের তাহা নাই। মুখ ও তুণ্ডদ্বারা আহার অন্বেষণ করে বলিয়াই তাহারা তির্যক্ বা পশু নহে, যাহাদের এইরূপ দৃঢ়চিত্ততা, এইরূপ কৃতজ্ঞতা এবং এইরূপ অনুব্রততা (একব্রতধারিত্ব) লক্ষিত হয়; (বরং) আমরা পশু যে-আমরা এইপ্রকার মহাত্মা মৃগকে পাইয়াই তদুপরি হিংসা উৎপাদন করি। থাক! এই মৃগকে কি পাশ বা জাল হইতে ছাড়াইয়া আনিব"। তখন সেই লুব্ধক সেই মৃগীকে গাথাদ্বারা বলিল—

আমি ইহা শুনি নাই বা দেখি নাই যে, মৃগী মানুষের সঙ্গে কথা বলে। হে ভদ্রে! তুমি সুখী হও, *তোমার জন্য আমি মহামৃগকে মুক্ত করিয়া দিতেছি॥ ৮॥*

তৎপর সেই লুব্ধক পাশবন্ধ মৃগরাজ শ্রীপ্রভকে মুক্ত করিয়া দিল। তখন সেই মৃগী সেই (২৩৭) মৃগরাজকে মুক্ত দেখিয়া আনন্দিত ও প্রমুদিত হইয়া এবং

एव लुब्धक नन्दाहि सह सर्वेहि ज्ञातिहि ।
यथाहू अद्य नन्दामि दृष्ट्वा मुक्तं महामृगं ।।९।।
पूर्वे निवास भगवा पूर्वजातिमनुस्मरन् ।
जातकमिदमाख्यासि शास्ता भिक्षूणमन्तिके ।।१०।।
ते स्कन्धा ते च धातवः तानि आयतनानि च ।
आत्मानमधिकृत्य भगवानेतमर्थं विधाकरे ।।११।।
अनवराग्रस्मि ससारे यत्र मे उषित पुरा ।
शिरिप्रभो अहू आसि मृगी आसि यशोधरा ।।१२।।
आनन्दो लुब्धको आसि एव धारयथ जातकं ।।१३।।
एवमिम अनुपरीतं बहुदु ख
उच्चनीचचरित इदं पुराण ।
विगतज्वरो विगतभयो अशोको
स्वजातक भाषति भिक्षुसघमध्ये ।।१४।।

समाप्त शिरिप्रभस्य मृगराजस्य जातकं ।

---

প্রীতি ও সৌমনস্য অনুভব করিয়া লুব্ধককে গাথাদ্বারা উত্তরে বলিল—

হে লুব্ধক! তুমিও (তেমন) সব জ্ঞাতিবর্গ সহ আনন্দ লাভ কর, যেমন অদ্য আমি মহামৃগকে মুক্ত দেখিয়া আনন্দ লাভ করিলাম॥ ৯॥

ভগবান্ শাস্তা (উপদেশক তথাগত) তাঁহার এক পূর্বজন্মের নিবাস (অবস্থা) ও পূর্বজন্ম স্মরণ করিয়া ভিক্ষুদিগের নিকট বিবৃত করিয়াছিলেন॥ ১০॥

ভগবান্ সেই-সেই স্কন্ধ (পঞ্চ স্কন্ধ), ধাতু (শরীর উপাদান) আয়তনসমূহ (ইন্দ্রিয়গ্রাম) ও আত্মা (ব্যক্তিত্ব)—এইগুলির প্রসঙ্গ তুলিয়া এই বিষয়টি ব্যক্ত বা প্রকাশিত করিয়াছিলেন॥ ১১॥

এই অনন্ত ও অনাদি যে সংসারে আমি পূর্বে (একবার) বাস করিয়াছিলাম, তখন আমিই ছিলাম শ্রীপ্রভ এবং যশোধরা ছিল (সেই) মৃগী, আনন্দ ছিল (সেই) লুব্ধক—এইভাবেই এই জাতক ধরিয়া লইবে॥ ১২-১৩॥

এইভাবে বিগততাপ, বিগতভয় ও বিগতশোক হইয়া (তথাগত) ভিক্ষুসংঘের মধ্যে নিজের এই জাতক (পূর্বজন্ম-কাহিনী) বিবৃত করিয়াছিলেন—যাহা (জাতক বা জন্ম) অপরিমিত বহুদুঃখময় ও উচ্চনীচ চরিতকথাযুক্ত পুরাণস্বরূপ (প্রাচীন আখ্যানস্বরূপ) ছিল॥ ১৪॥

মৃগরাজ শ্রীপ্রভের জাতক সমাপ্ত।

अथ बोधिसत्वं दानि उरुविल्वायां तपोवने नद्या नैरंजनायास्तीरे दुष्कर-चारिकां चरन्तं मारो पापीयां उपसंक्रम्य वदयति। किं प्रहाणेन करिष्यसि अगारमध्ये वस। राजा भविष्यसि चक्रवर्ति। महायज्ञानि च यजाहि अश्वमेधं पुरुषमेधं सोमप्रासं निरर्गडं पदुमं पुण्डरीकं च। एतानि यज्ञानि यजित्वा प्रेत्य स्वर्गेषु मोदिष्यसि बहु च पुण्यं प्रसविष्यसि। प्रहाणं च दुष्करं दुरभिसंभणं अन-(२३८)वद्यपुण्यपारिहाणि ब्रह्मचर्यवासं। बोधिसत्वो आह। नाहं पापीमं पुण्येहि अर्थिको।

रमणीयान्यरण्यानि वनगुल्मा च पश्यिय।
उरुविल्वाय सामन्ते प्रहाणं प्रहितं मया ॥१॥
परिक्राम्य व्यायमन्तं उत्तमार्थस्य प्राप्तये।
नमुचि करुणां वाचं भाषमाण इहागमत् ॥२॥
कृशो त्वमसि दुर्वर्णो सन्तिके मरणं तव।
संहर महाप्रहाणं न आशा तुह्य जीविते ॥३॥
जीवितं ते हितं श्रेष्ठं जीवन् पुण्यानि काहिसी।
करोहि पुण्यानि तानि येन प्रेत्य न शोचसि ॥४॥

---

অনন্তর সেই সময়ে নৈরঞ্জনা নদীর তীরে উরুবিল্বার তপোবনে বোধিসত্ত্বকে দুষ্কর তপস্যা করিতে লক্ষ্য করিয়া অতীব পাপী মার তাঁহার নিকট অগ্রসর হইয়া তাঁহাকে বলিতে লাগিল—"প্রণিধান বা উৎকট ধ্যানসমাধিদ্বারা তুমি কি করিবে? অগারমধ্যে (গৃহমধ্যে) বাস কর। তুমি চক্রবর্তী রাজা হইবে। মহাযজ্ঞসমূহ সম্পাদন কর—যথা, অশ্বমেধযজ্ঞ, পুরুষমেধ (নরমেধ) যজ্ঞ, সোমপ্রাশ (সোমপান)-যজ্ঞ, নিরর্গল (অবাধ) পদ্ম-যজ্ঞ ও পুণ্ডরীকযজ্ঞ। এই যজ্ঞসমূহ সম্পাদন করিয়া তুমি মৃত্যুর পরে স্বর্গসমূহে আনন্দ ভোগ করিতে পারিবে এবং বহু পুণ্য ফলরূপে প্রাপ্ত হইবে। প্রণিধান দুষ্কর ও দুঃসম্ভবপর (দুর্লভ) কার্য এবং ব্রহ্মচর্যবাস (২৩৮) নির্মল পুণ্যের হানিজনক" বোধিসত্ত্ব (উত্তরে) বলিলেন—হে পাপীয়ান্ (মার)! আমি পুণ্যরাশির প্রার্থী নহি"।

"উরুবিল্বার নিকটে রমণীয় অরণ্যসমূহ ও বনগুল্মসমূহ দেখিয়া আমি প্রণিধানকার্য অবলম্বন করিয়াছি"॥ ১॥

উত্তম অর্থের বা উদ্দেশ্যের প্রাপ্তিজন্য উদ্যত হইয়া প্রযত্নকারী বোধিসত্ত্বকে নমুচি (মার) করুণ বাক্য বলিতে বলিতে এখানে আসিয়া উপস্থিত হইল॥ ২॥

"তুমি কৃশ ও দুর্বর্ণ (বর্ণরহিত) হইয়াছ। তোমার মরণ নিকটবর্তী। মহা-প্রণিধানের সংহার বা অবসান কর। তোমার জীবনের আশা নাই"॥ ৩॥

"জীবনই তোমার শ্রেষ্ঠ হিতকর বস্তু। বাঁচিয়া থাকিলে তুমি পুণ্যকর্মসমূহ করিতে পারিবে। পুণ্যকর্মসমূহ করিতে থাক, তদ্দ্বারা তুমি মৃত্যুর পরে শোচনীয় অবস্থা প্রাপ্ত হইবে না"॥ ৪॥

चरन्तेन ब्रह्मचर्यं अग्निहोत्रं च जूहता ।
अनन्तं जायते पुण्यं किं प्रहाणेन काहिसि ।।५।।
दूर आशा प्रहाणस्य दुष्करं दुरभिसंभुणं ।
इमा वाचां भणे मारो बोधिसत्वस्य सन्तिके ।।६।।
त तथा इदानि मार बोधिसत्वो घ्यभापत ।
कृष्णवन्धु पापीमं नाहं पुण्यार्थिको इहागतः ।।७।।
अणुमात्रैः पुण्यैः अर्थो मह्यं मार न विद्यति ।
येषा तु अर्थो पुण्येहि कथं ता मार न वद्यसि ।।८।।
नाहं अमरो ति मन्यामि मरणान्तं हि जीवितं ।
अनिवर्तं गमिष्यामि ब्रह्मचर्यपरायणः ।।९।।
(२३९) नदीनामपि श्रो(स्रा)तासि अय वातो वा शोषयेत् ।
किं मम प्रहितात्मस्य शोणितं नोपशोषये ।।१०।।
शरीरं उपशुष्यति पित्तं श्लेष्मं च वातज ।
मानुसानि लोहित चैव अवजीर्यतु साम्प्रत ।।११।।
मानुसेहि क्षीयमाणेहि भूयो चित्त प्रसीदति ।
भूयोस्मृति च वीर्यं च समाधि चावतिष्ठति ।।१२।।

---

"(ব্রাহ্মণদিগের করণীয়) ব্রহ্মচর্য ও অগ্নিহোত্র সম্পাদন করিলে তোমার অনন্ত পুণ্য লাভ হইবে। প্রণিধানদ্বারা তুমি কি করিবে?" ॥ ৫ ॥

"দুষ্কর ও দুরভিসম্ভবপর (দুর্লভ) প্রণিধানের আশা অত্যন্ত দূরে রহিয়াছে"। বোধিসত্ত্বের নিকট মার এই বাক্য বলিল ॥ ৬ ॥

তৎপর সেইরূপে (ভাষমাণ) সেই মারকে বোধিসত্ত্ব বলিলেন—"হে কৃষ্ণবন্ধু, হে পাপীয়ান্! আমি পুণ্যপ্রার্থী হইয়া এখানে আসি নাই" ॥ ৭ ॥

"হে মার! অণুমাত্র পুণ্যদ্বারাই আমার কোন কাজ নাই। হে মার! যাহাদের পুণ্যদ্বারা কাজ আছে, তাহাদিগকে কেন তুমি (এইসব) বল না?" ॥ ৮ ॥

"আমি মনে করি না যে আমি অমর; (আর) জীবন মরণপর্যবসায়ী। আমি ব্রহ্মচর্যপরায়ণ হইয়া সেই স্থানে যাইব যেখান হইতে আর নিবর্তন নাই" ॥ ৯ ॥

(২০১) "এই বায়ু নদীসমূহের স্রোতোরাজি শোষণ করিতে পারে। আমি প্রণিহিতাত্ম হইয়া কেন আমার শোণিত শোষিত করিব?" ॥ ১০ ॥

"আমার শরীর (এবং তৎস্থিত) পিত্ত, শ্লেষ্মা ও বাত শুকাইয়া যাইতেছে। সম্প্রতি আমার মাংস ও রক্তও জীর্ণতা বা ক্ষয়প্রাপ্ত হউক" ॥ ১১ ॥

"শরীরের মাংস ক্ষয় হইতে থাকিলে, চিত্ত অধিকতর প্রসন্ন (শান্ত) হইতে থাকে। এবং স্মৃতি (মনন), বীর্য ও সমাধি (ধ্যানাভিনিবেশ) অধিকতর অবস্থান করে" ॥ ১২ ॥

तस्य चैवं विहरतो प्राप्तस्य उत्तमं पदं।
नायमत्र क्षतं कायं पश्य सत्वस्य शुद्धतां ॥१३॥
अस्तिच्छन्दो च वीर्यं च प्रज्ञा च मम विद्यति।
नाहं तं पश्यामि लोके यो प्रहाणातो वारये ॥१४॥

. . . . . . . . . . . . . . . . . . . . . . .
एषो सज्जो प्राणहरो धिग्ग्राम्यं नो च जीवितं ॥१५॥
तस्मा स्मृतिमन्तो सन्तो संप्रजानो निरोपधिः।
. . . . . . . . . . . . . . . . . . . . . . . ॥१६॥
एषोहं च परं चित्तं भावयित्वान योधने।
वलेन वनं भिन्दित्वा अनुष्ठेयमनुष्ठितो ॥१७॥
अहं बोधितरोरधस्तात् अप्राप्ते अमृते पदे।
दृष्ट्वा नमुचिनो सेनां सन्नद्धामुत्सृतध्वजां ॥१८॥
(२४०) युद्धाय प्रतियास्यामि नाहं स्थानार्थमुपाविशे।
तामहं निर्वतिष्यामि सेनां ते अनुपूर्वसः (शः) ॥१९॥
कामा ते प्रथमा सेना द्वितीया आरति वुच्चति।
तृतीया क्षुत्पिपासा च चतुर्थी तृष्णा वुच्चति ॥२०॥

---

"এইরূপে অবস্থানকারী ও উত্তম পদ লাভকারী তাঁহার (সেই ব্যক্তির) পক্ষে এই বিষয়ে তাঁহার কায় ক্ষীণ ধরা যায় না; (সেই) সত্ত্বের বা জীবের শুদ্ধচিত্ততা লক্ষ্য কর" ॥ ১৩ ॥

"আমার ছন্দ বা ইচ্ছা, বীর্য ও প্রজ্ঞা রহিয়াছে। আমি লোকে বা পৃথিবীতে সেই ব্যক্তিকে দেখিতে পাই না, যে (ব্যক্তি) (আমাকে) প্রণিধান বা সমাধি হইতে নিবারিত করিতে পারিবে" ॥ ১৪ ॥

"......(এই নমুচি) *আমার প্রাণসংহারী হইয়া সজ্জিত বা প্রস্তুত রহিয়াছে।* আমাদের গ্রাম্য বা প্রাকৃতজনোচিত জীবনকে ধিক্" ॥ ১৫ ॥

"অতএব, স্মৃতিমান্ (মননশক্তিসম্পন্ন), সংপ্রজ্ঞ ও নিরুপধি (বিষয়াসক্তি হইতে মুক্ত থাকিয়া......" ॥ ১৬ ॥

"এই আমি এই (প্রয়াস-)যুদ্ধে শ্রেষ্ঠ চিত্তশক্তি সংবর্ধিত করিয়া, বলদ্বারা (তৃষ্ণারূপ) বন ভেদ করিয়া অনুষ্ঠানযোগ্য কার্য অনুষ্ঠান করিতেছি" ॥ ১৭ ॥

"অমৃত পদ প্রাপ্তির পূর্বপর্যন্ত আমি বোধিবৃক্ষের তলে বসিয়া উত্থাপিত ধ্বজ ও যুদ্ধসজ্জিত নমুচির সেনাকে দেখিয়া (২৪০) যুদ্ধের জন্য অগ্রসর হইতেছি; *আমি (সুবিধাজনক) স্থান লাভের জন্য উপবেশন করিব না।* আমি ক্রমে ক্রমে তোমার সেই সেনাকে ফিরাইতে পারিব" ॥ ১৮-১৯ ॥

"তোমার প্রথম সেনা 'কাম' বা বিষয়াভিলাষ; দ্বিতীয় সেনাকে বলা হয়

पचमा स्त्यानमिद्धं ते पष्टी भीरु प्रवुच्चति ।
सप्तमा विचिकित्सा ते मानार्थो भोति अष्टमा ।
लोभो ति श्लोको सत्कारो मिथ्यालब्धो च मो यशो ।।२१।।
एषा नमुचिनो सेना सन्नद्धा उच्छ्रितध्वजा ।
प्रगाढा अत्र दृश्यन्ते एके श्रमनब्राह्मणाः ।।२२।।
न तामशूरो जयति जित्वा वा अनुशोचति ।
तां प्रज्ञाय ते भेत्स्यामि आमपात्र व अम्वुना ।।२३।।
वशीकरित्वान ते शल्य कृत्वा सूपास्थता स्मृति ।
आलब्धवीर्यो विहरन्तो विनेष्य श्रावका पितु ।।२४।।
प्रमादमनुयुजन्ति वाला दुर्मेधिनो जना ।
गंसामि ते अकामस्य यत्र दु.खं निरुध्यति ।।२५।।
तस्य शोकपरीतस्य विनाशं गच्छि उच्छ्रिति ।
ततश्च दुर्मनो यक्षो तत्रैवातरहायिथा ।।२६।।

---

'আরতি' (বা অসন্তোষ, বা কর্মসম্পাদনে বিরমণ); তৃতীযের নাম 'ক্ষুধা ও পিপাসা,' চতুর্থের নাম বলা হয় 'তৃষ্ণা'" ॥ ২০ ॥

"তোমার পঞ্চম সেনার নাম 'স্ত্যান ও মিদ্ধ' (অর্থাৎ আলস্য ও তন্দ্রা), ষষ্ঠ সেনাকে বলা হয় 'ভীরুতা', সপ্তম সেনার নাম বিচিকিৎসা (বা সংশয়) এবং অষ্টমটির নাম হয় 'মান' (বা গর্ব)। আরও আছে—লোভ, শ্লোক (প্রশংসা), সৎকার (সম্মান-প্রদর্শন) ও মিথ্যালব্ধ যশঃ" ॥ ২১ ॥

ইহাই নমুচির (মারের) সজ্জিতা ও উত্থাপিতধ্বজা সেনা। এই (সেনামধ্যে) অনেক শ্রমণ ও ব্রাহ্মণদিগকে প্রবিষ্ট দেখা যাইতেছে" ॥ ২২ ॥

"সেই (সেনাকে) শৌর্যবিহীন কেহ জয় করিতে পারে না, এবং জয় করিলেই অনুশোচনা করিয়া থাকে। কিন্তু, আমি ইহাকে চিনিয়া লইয়া (তোমার সেনাকে), জল যেমন অপক্ক (মৃৎ-) পাত্রকে নষ্ট করে, তেমন ভাঙ্গিয়া দিতে পারিব" ॥ ২৩ ॥

"তোমার শল্য বা বাণসমূহ নিজবশে আনিয়া, আমার স্মৃতি (বা মননশক্তি) উত্তমরূপে খাটাইয়া এবং বীর্য অবলম্বন করিয়া থাকিয়া আমি, কিন্তু, শ্রাবকগণকেও বিনয়-পথে আনিতে পারিব" ॥ ২৪ ॥

"মূর্খ ও দুর্মেধা যাহারা তাহারাই প্রমাদে (নিরুদ্যমে) যুক্ত হইয়া পড়ে। তুমি ইচ্ছা না করিলেও, আমি সেখানে পৌঁছিয়া যাইব যেখানে দুঃখ নিরুদ্ধ হইয়া যায়" ॥ ২৫ ॥

শোকাভিভূত তাহার (মারের) উচ্ছ্রিতি (উচ্ছ্রায় বা গর্বোন্নতি) বিনাশ প্রাপ্ত হইল ('বীণা কক্ষতো সৃতা—এই পাঠ ধৃত হইলে—'তাহার কক্ষদেশ হইতে বীণা অবসৃত বা পতিত হইল—এইরূপ অনুবাদ)। তারপর যক্ষ দুর্মনায়মান হইয়া অন্তর্ধান করিল ॥ ২৬ ॥

यथा बोधिसत्वो संप्रजानं मृषावादं भयभीतो संप्रजानमृषावादमेव विजुगुप्स (२४१)-न्तो अलमिति च तां देवतां प्रतिक्षिपित्वा अनुसुखं औदरिकमाहारं अभ्यवहृतो ततो पंचका भद्रवर्गीया निर्विद्य प्रत्यवक्रान्ताः। समाधितो विभ्रष्टो श्रमणो गौतमो शैथिलिको बाहुलिकं पुन औदरिकमाहारमभ्यवहृतं।

मारो पि पापीयां षड्वर्षाणि बोधिसत्वस्य दुष्करचर्यां चरन्तस्य पृष्ठतो पृष्ठतो समनुबद्धो अवतारार्थी अवतारं गवेषी। सो पि बोधिसत्वस्य षड्वर्षानि अनुबद्धन्तो अलभन्तोवतारं अलभन्तो अलम्बणं, अलभन्तो अभिनिवेशनं निर्विद्य प्रत्यवक्रान्तो।

यं तत्र तत्र मारो न प्रसहे मारुतो व हिमवन्तं।
तं मृत्युराजप्रणुदं पूजयति सदेवको लोको ॥२७॥

भिक्षू भगवन्तमाहंसुः। मोक्षाभिप्रायेन भगवता दुष्करं चीर्णं। भगवानाह। न भिक्षवो एतर्हि एव मये मोक्षाभिप्रायेण दुष्करं चीर्णं। भिक्षु आहन्सुः। अन्यदापि भगवं। भगवानाह। अन्यदापि भिक्षवो।

---

যখন ভয়ে ভীত হইয়া বোধিসত্ত্ব এই মিথ্যাবাদ বিশেষভাবে বুঝিতে পারিলেন এবং এই মিথ্যাবাদ বুঝিয়া ইহার নিন্দাপূর্বক (২৪১) 'ইহার আর প্রয়োজন নাই' এই ভাবিয়া সেই দেবতাদিগকে নিন্দা করিয়া সুখসহকারে ঔদারিক (পর্যাপ্ত) আহার ভক্ষণ করিলেন, তখন ভদ্রবর্গীয় পাঁচ জন (সহচর) বিরক্তি অনুভব করিয়া (তাঁহাকে ছাড়িয়া) চলিয়া গেলেন (এবং বলিলেন যে,) 'সমাধি হইতে বিশেষরূপে ভ্রষ্ট হইয়া শ্রমণ গৌতম বেশী করিয়া ঔদারিক (পর্যাপ্ত) আহার গ্রহণ করিতেছেন'।

পাপিষ্ঠ মার ছয় বৎসর ব্যাপিয়া দুষ্করতপস্যানিরত বোধিসত্ত্বের পশ্চাৎ পশ্চাৎ লাগিয়া থাকিয়া সুযোগ অন্বেষণে ব্যস্ত হইয়া অবতার বা আক্রমণের অবসর খুঁজিতেছিল। সে কিন্তু ছয় বৎসর পর্যন্ত বোধিসত্ত্বের পিছনে থাকিয়া অবসর না পাইয়া, আশ্রয় না পাইয়া এবং অভিনিবেশের স্থান লাভ না করিয়া বিষণ্ণমনে ফিরিয়া গেল।

বায়ু যেমন হিমালয় (পর্বতকে) পরাভূত করিতে পারে না, তেমন সেই-সেই স্থানে যাঁহাকে মারও পরাভূত করিতে পারে নাই—সেই মৃত্যুরাজের নিরসনকারীকে দেবলোক সহ এই (মানুষ) লোক পূজা করিতেছে॥ ২৭॥

ভিক্ষুগণ ভগবানকে জিজ্ঞাসা করিলেন—"ভগবান্ কি মোক্ষের অভিপ্রায়েই দুষ্কর তপস্যার আচরণ করিয়াছেন"? ভগবান্ উত্তর করিলেন—"হে ভিক্ষুগণ! এইবারই যে আমি মোক্ষাভিপ্রায়ে দুষ্কর তপস্যার আচরণ করিয়াছি, তাহা নহে"। ভিক্ষুগণ জিজ্ঞাসা করিলেন—"হে ভগবান্! অন্য সময়েও কি?" ভগবান্ উত্তরে বলিলেন—"হে ভিক্ষুগণ! অন্যসময়েও"।

भूतपूर्वं भिक्षवो अतीतमध्वानं नगरे वाराणसी काशिजनपदे शाकुन्तिको शकुना निगृह्णीय अरण्यायतनेषु जालेहि च पाशेहि च पजरेहि च उपरुध्य निवापेन पानीयेन च पोषिय पोषिय बहुवहुानि कृत्वा इष्टेन अर्घेन(ण)विक्रीणति। तहि अपरो शकुन्तको गृह्णीयान पजरे उपरुद्धो। सो दानि शकुन्तको पण्डित-जातिको पश्यति ये ते शकुन्तका पूर्वं प्रक्षिप्ता पजरे। निवापुष्टा बहुबहुा ते जनेन त्रिणिय तत. पजरेहि कड्डियन्ति। सो पश्यति सकुन्तको पण्डितजातिको। न एष अस्माक शाकुन्तिको हितकामताये निवाप वा पानीय वा देति, अर्थहेतोः एष अस्माक निवाप वा उदक वा देति। यदा बहुबहुा भवेन्सुः ततो इष्टेन अर्घेन विक्रीये(२४२)न्सु.। तदह तथा करिष्यामि यथा मे न कोचित् क्रीणिष्यति, अधिकार पि मे अलभमानो न कोचि गृह्णीष्यति। तत्तक आहार करिष्यामि यथा नैव वड्डीभविष्यामि न वा मरिष्यामि। सो दानि तत्तक आहार परि-भूजति उदक तत्तक पिबति यथा नैव वड्डीभवति नापि मरति चापि। पुरुषो शकुन्तकाना क्रयिको आगच्छति। ततो सो शकुन्तको तस्य पजरस्य द्वारस्य अग्रतो एव तिष्ठति। सो शकुन्तक्रयिको पुरुषो हस्त पजरे प्रक्षिपित्वा त शकुन्तकं परामृशति न च तमानुस हस्तेन गच्छति, उत्तोलेति न च गुरुको। ततः पजरातो

---

হে ভিক্ষুগণ! বহুপূর্বে এক অতীত কালে কাশিজনপদের বারাণসী নগরে একটি শাকুন্তিক (শাকুনিক বা পক্ষিগ্রাহক) অরণ্যসমূহের মধ্যে জাল ও পাশদ্বারা পক্ষী ধরিয়া সেগুলিকে পঞ্জরে উপরুদ্ধ করিয়া, শস্য ও জলদ্বারা পোষণ করিতে করিতে পরিপুষ্টদেহ করিয়া অভিপ্রেত মূল্যে বিক্রয় করিত। সেখানে সে একটি পক্ষীকে ধরিয়া ইহাকে পঞ্জরে উপরুদ্ধ করিয়া রাখিল। তৎপর সেই পণ্ডিতজাতীয় পক্ষীটি দেখিল যে, পূর্বে যে-সব পক্ষী পঞ্জরে প্রক্ষিপ্ত হইয়াছে, সেগুলি শস্যদ্বারা পুষ্ট হইয়া বর্ধিত হইলে পর, লোকেরা সেগুলিকে ক্রয় করিয়া সেই পঞ্জরসমূহ হইতে টানিয়া বাহিরে নেয়। সেই পণ্ডিতজাতীয় পক্ষীটি (এইরূপ) বলিল—"এই শাকুনিক আমাদের হিত করার অভিপ্রায়ে আমাদিগকে শস্য বা জল দেয় না, নিজের অর্থলাভের জন্য সে আমাদিগকে শস্য বা জল দিয়া থাকে। যখন (পাখীগুলি) পরিপুষ্ট হইয়া উঠিবে তখন অভিলষিত মূল্যে ইহারা বিক্রীত হইবে। (২৪২) অতএব আমি তেমনভাবে কাজ করিব যেন আমাকে কেহই ক্রয় না করে এবং আমার উপর অধিকার বা দাবী লাভ না করিয়া কেহই যেন আমাকে না লইয়া যায়। আমি ততটুকু আহার করিব যাহাতে আমি খুব সংবর্ধিত বা পরিপুষ্ট না হই, অথচ মরিয়াও না যাই"। তখন সে ততটুকু আহার ভোজন করে, ততটুকু জল পান করে যাহাতে সে অত্যন্ত পরিপুষ্ট হয় না, মরিয়াও যায় না। পক্ষিক্রয়কারী এক পুরুষ আসিল। তারপর সেই পাখীটি পঞ্জরের দ্বারের সম্মুখে এইভাবে অবস্থান করিতেছিল। সেই পক্ষিক্রয়কারী পুরুষ তাহার হস্ত পঞ্জরে প্রক্ষেপ করিয়া সেই পাখীটিকে স্পর্শ করিয়া অনুভব করিল, কিন্তু, তাহার মাংস হাতে লাগিল না, ইহাকে (হাতে) উঠাইয়া

एकान्तेन कृत्वा अन्ये वड्डवड्डा शकुन्तका गुरुका ततो निलयं गृह्णाति। तं शुष्कशाकुन्तको ति ग्लानको ति कृत्वा न कोचि तं गृह्णाति। सो पि शाकुन्तिको पश्यति। भवितव्यं स एष शकुन्तको ग्लानो ति यदा एष ग्लानभूतो मुक्तो भविष्यति ततो निवापं च वहुतरक (कं) भुंजिष्यति उदकं च बहुतरकं पिबिष्यति। ततः वट्टी(ड्डी)भूतो समानो विक्रास्यति। मा एषो अन्यानपि शकुन्तकां ग्लानां करिष्यति संसर्गेन, पंजरातो निष्कुट्टि(ड्डि)य वा(बा)ह्यतो पंजरस्य अत्तीयति पाटियेकं निवापं लभति पाटियेकं पानीयं लभति, यं वेलं वट्टो(ड्डो) भविष्यति ततो विक्रयिष्यतीति।

सो पि पण्डितो शकुन्तको तस्य शाकुन्तिकस्य विस्रम्भेसि। यं वेलं सो शाकुन्तिको तं पंजरद्वारं मुंचति शकुन्तकानामर्थाये निवापस्य वा अर्थाये उदकस्य वा, ततः सो शकुन्तको अप्यज्ञातो व तं पंजरं प्रविशति। यं वेलं सो परोक्षो भवति (२४३) ततो स्वयं तं पंजरं प्रविशति। यदापि पंजरकातो निष्क्रमितुकामः भवति ततो स्वयमेव निर्धावति। तं न कोचि ग्लानको ति कृत्वा निवारेति। सो दानि शकुन्तको तथा दुर्वलशरीरो यथा ततो पंजरातो अद्वारेणापि प्रविशति

---

এক পার্শ্বে রাখিয়া, অন্য পরিপুষ্ট ও ভারী পক্ষীগুলিকে (খরিদ করিয়া) (নিজ) গৃহে লইয়া গেল। অতএব, সেই শুষ্কাকৃতি পক্ষীটিকে ব্যাধিগ্রস্ত মনে করিয়া কেহই তাহাকে গ্রহণ করিল না। সেই শাকুনিক (বা পক্ষিগ্রাহক) বুঝিলঃ—"ইহা হইতে পারে যে এই পাখীটি ব্যাধিগ্রস্ত এবং এই ব্যাধিগ্রস্ত পাখীটি মুক্ত অবস্থায় থাকিলে ইহা বহুপ্রকার শস্য ভোজন করিতে পারিবে এবং বহুপ্রকার জল পান করিতে পারিবে। তারপর ইহা বেশী সংবর্ধিত বা পরিপুষ্ট হইলে বিক্রীত হইবে। যাহাতে এই পাখীটি অন্যান্য পাখীগুলিকে সংসর্গদ্বারা ব্যাধিগ্রস্ত না করিতে পারে, সেইজন্য ইহাকে পঞ্জর হইতে নিষ্কর্ষিত করিয়া, পঞ্জরের বাহিরে রাখা হইবে এবং প্রত্যেক রকমের (নানা রকমের) শস্য সে লাভ করিবে এবং প্রত্যেক রকমের পানীয় দ্রব্য লাভ করিবে এবং যে সময়ে ইহা পরিপুষ্ট হইবে তখন ইহা বিক্রীত হইবে"।

সেই পণ্ডিত পক্ষীও সেই শাকুনিক বা পক্ষিগ্রাহকের বিশ্বাস উৎপাদন করিল (অর্থাৎ বিশ্বাসভাজন হইল)। যে সময়ে সেই পক্ষিগ্রাহক পক্ষিগণের শস্য বা জল দেওয়ার জন্য সেই পঞ্জরদ্বার খুলিত, তখন সেই পক্ষীটিও তাহার অজ্ঞাতসারেই সেই পঞ্জরে প্রবেশ করিত। যে সময়ে সে পরোক্ষ বা চক্ষুর অগোচর হইত, (২৪৩) তখন সে নিজেই সেই পঞ্জরে প্রবেশ করিত। আবার যখন সে পঞ্জর হইতে নিষ্ক্রান্ত হইতে চাহিত তখন নিজেই নির্ধাবিত হইত (বাহিরে আসিয়া পড়িত)। কেহই ইহাকে ব্যাধিগ্রস্ত বলিয়া বারণ করিত না। তখন সেই পক্ষী এমন দুর্বলশরীর-বিশিষ্ট হইয়া গেল, যে সেই পঞ্জর হইতে যে-স্থানটি দ্বারও নহে সেই স্থান দিয়া

विनिष्क्रमति पि, ते पि त शकुन्तको ग्लानको ति कृत्वा उपेक्षन्ति। सो दानि य वेल जानति स्म विश्वस्ता मम एते शाकुन्तिका ति बहुतरक च निवाप चरति बहुतरक च पानीय पिबति याव शक्य पलायितु दूर उड्डीयितु। सो दानि य वेल समुत्साहीभूतो अय मे कालो पलायितु ति सो तस्य पजरस्य उत्तरि स्थित्वा ताये वेलाये तेषा शकुन्तकाना पुरतो इमा गाथा अध्यभाषे।

नाचिन्तयन्तो पुरुषो विशेषमधिगच्छति।
पश्य चिन्ताविशेषेण मुक्तो स्मि च स्ववन्धनात् ॥१॥

सो शकुन्तको एता गाथा भाषित्वा ततो शाकुन्तिकस्य गृहातो उत्पतित्वा पुन अरण्य गतो।

भगवानाह। स्यात् खलु पुनर्भिक्षव युष्माकमेवमस्यादन्य स तेन कालेन तेन समयेन पण्डितजातिको शकुन्तको अभूषि। नैतदेव द्रष्टव्य। तत् कस्य हेतो। अह सो भिक्षवस्तेन कालेन तेन समयेन पण्डितजातिको शकुन्तको अभूषि। अन्यो सो तेन कालेन तेन समयेन शान्तको अभूषि। नैतदेव द्रष्टव्य। तत् कस्य हेतो। एष भिक्षवो मारो पापीया तेन कालेन तेन समयेन सो शाकुन्तिको

---

প্রবেশও করে, বাহির হইয়াও যায় এবং তাহারাও ইহাকে ব্যাধিগ্রস্ত মনে করিয়া উপেক্ষা করে। তারপর যে সময়ে সে বুঝিতে পারিল যে সেই পাক্ষিগ্রাহকেরা তাহাকে বিশ্বাস করে, তখন সে বেশী করিয়া শস্য খাইতে এবং বেশী করিয়া জল পান করিতে লাগিল—যেন সে পলাইতে ও দূরে উড়িয়া যাইতে সমর্থ হয়। তৎপর যে সময়ে সে ইহাই আমার পলাইবার কাল' এরূপ নিশ্চিতভাবে উৎসাহ লাভ করিল, তখন সে সেই পঞ্জরের উপর দিয়া (উড়িতে) থাকিয়া সেই সময়ে সেই পক্ষীদিগের সম্মুখে এই গাথা উচ্চারণ করিল—

"যে পুরুষ চিন্তাশীল নহে সে বৈশিষ্ট্য লাভ করিতে পারে না। দেখ আমি চিন্তাবিশেষদ্বারা নিজ বন্ধন হইতে মুক্ত হইয়াছি" ॥ ১ ॥

এই গাথা উচ্চারণ করিয়া সেই পক্ষী সেই শাকুনিকের গৃহ হইতে উড়িয়া যাইয়া পুনরায় অরণ্যে চলিয়া গেল।

ভগবান বলিলেন— হে ভিক্ষুগণ! এমন হইতে পারে যে তোমরা এমন ভাবিতেছ যে সেই কালে সেই সময়ে সেই পণ্ডিত পক্ষীটি অন্য কেহ ছিল। তোমরা এমনটি মনে করিও না। ইহা কি কারণে? হে ভিক্ষুগণ! সেই কালে সেই সময়ে আমিই ছিলাম সেই পণ্ডিত পক্ষী। (তোমরা এমনও ভাবিতে পার যে) সেই কালে সেই সময়ে সেই পক্ষিগ্রাহক অন্য কেহ ছিল। তোমরা এইরূপ মনে করিও না। ইহা কি কারণে? হে ভিক্ষুগণ! সেই কালে সেই সময়ে পাপিষ্ঠ মারই সেই পক্ষিগ্রাহক

अभूषि। तदापि मया एतस्य मारस्य शाकुन्तिकस्य पंजरातो मोक्षाभिप्रायेण दुष्करं चीर्णं।

समाप्तं शकुन्तकजातकं।

(२४४) भिक्षू भगवन्तमाहन्सुः। बुद्धिविशेषण भगवान् शकुन्तभूतो मारस्य हस्तगतो वशगतो पंजरगतो मुक्तो। भगवानाह। अन्यदापि बुद्धिविशेषेण एतस्य मारस्य हस्तगतो वशगतो करण्डकगतो मुक्तो। भिक्षू आहन्सुः। अन्यदापि भगवं। भगवानाह। अन्यदापि भिक्षवः।

भूतपूर्वं भिक्षवो अतीतमध्वानं नगरे वाराणसी काशिजनपदे परिपात्रिका नाम नदी। तस्या कूले अपरमालाकारस्य वनमालं। असौ दानि मालाकारो मालस्यैव तं वेलं वनमालमागत्वा पुष्पाणि उच्चिनिय पुष्पकरण्डकमादाय मालाकारणातो निर्धावति ग्रामाभिमुखो च प्रस्थितो। ततो च नदीतो कच्छपो उद्धरित्वा गोमयं भक्षयति तस्य मालाकारस्य अविदूरे। सो तं मालाकारेण दृष्टो। तस्य एतदभूषि। शोभनो मम अयं अद्य कच्छपो अोलंको भविष्यति। तेन दानि तं पुष्पकरण्डं एकान्ते स्थपिय सो कच्छपो गृहीतो। सो तं तहिं पुष्पकरण्डे

---

ছিল। সেই সময়েও আমি এই মাররূপী শাকুনিকের পঞ্জর হইতে মোক্ষ বা মুক্তি লাভের জন্য দুষ্কর তপস্যার আচরণ করিয়াছিলাম"।

শকুন্তজাতক সমাপ্ত।

(২৪৪) ভিক্ষুগণ ভগবানকে বলিলেন—"ভগবান্ শকুন্ত বা পক্ষী হইয়া মারের হস্তগত, বশংগত ও তাহার পঞ্জরগত হইয়াও বুদ্ধিবৈশিষ্ট্যদ্বারা মুক্ত হইয়াছিলেন"। ভগবান্ উত্তরে বলিলেন—"অন্য এক সময়েও বুদ্ধিবৈশিষ্ট্যদ্বারা আমি এই মারের হস্তগত, বশংগত ও করন্ডক (পেটিকা) গত হইয়াও মুক্ত হইয়াছিলাম" ভিক্ষুরা বলিলেন—"হে ভগবন্! অন্য এক সময়েও?" ভগবান্ উত্তর করিলেন—"হে ভিক্ষুগণ! অন্য এক সময়েও"।

হে ভিক্ষুগণ! বহু পূর্বে অতীত কালে কাশিজনপদের বারাণসী নগরে পরিপাত্রিকা নামে এক নদী ছিল। তাহার তীরে এক মালাকারের পুষ্পবন (পুষ্পোদ্যান) ছিল। তখন সেই মালাকার মালার জন্য সেই সময়ে সেই পুষ্পবনে যাইয়া পুষ্পসমূহ চয়ন করিয়া পুষ্পকরন্ডক লইয়া মালা প্রস্তুত করার জন্য (সেই স্থান হইতে) ধাবিত হইয়া গ্রামাভিমুখে প্রস্থান করিল। তখন (সেই) নদী হইতে উত্থিত হইয়া এক কচ্ছপ সেই মালাকারের অল্পদূরে গোময় খাইতেছিল। সেই মালাকার ইহাকে দেখিতে পাইল। তাহার মনে এই ভাব উদিত হইল—"অদ্য এই সুন্দর কচ্ছপ আমার এক উদঙ্ক বা পাত্র হইতে পারিবে"। তখন সে সেই পুষ্প-

प्रक्षिपति। तं च सो कच्छपो मानुषिकाये वाचाये आह्। इमाहं कर्दमप्रक्षितो ततो मयेतं पुष्पं कर्दमेन विनाशिष्यति। अत्र मे उदके धोवित्वा करण्डे प्रक्षिप। तदेते पुष्पा न विनास्यन्ति। सो दानि मालाकारो पश्यति। शोभनो खल्वयं कच्छपो, गच्छामि तं अत्र उदके धोवामि। ततो एवा पुष्पाणि न विनाशिष्यन्ति कर्दमेन। सो पैतृकविषये शुण्डिकापंचमानि अंगानि प्रसारेत्वा तस्य मालाकार-हस्तातो भृष्टो। तहिं उदके गाढो ताये नदीये अविदूरे तटमुदेत्वा तं मालाकारं गाथायेध्यभापति।

(२४५) निरामया पारिपात्रि कृषिकारणा च कूलेन शक्तितो।
कर्दमकृतो स्मि मालिक धोविय पेलाय मां प्रक्षिप ॥१॥
अथ खलु भिक्षवः स मालाकारो कच्छपं गाथाये प्रत्यभापति।
बहुका मये सचितासु राज्ञा त्रिगणो बहुको समागतो।
तत्र तुवं भद्र कच्छप करण्डे मालकृते रमिष्यसि ॥२॥
अथ खलु भिक्षवः स कच्छपस्त मालाकारं गाथाये अभ्यभापे।

---

করণ্ডক একান্তে স্থাপন করিয়া সেই কচ্ছপটিকে ধরিল। সে ইহাকে সেই পুষ্পকরণ্ডকে প্রক্ষিপ্ত করিল। সেই কচ্ছপ তাহাকে মানুষের মত বাক্যে বলিল— "এই আমি কর্দমদ্বারা প্রক্ষিপ্ত হইয়াছি (অর্থাৎ কর্দমলিপ্ত হইয়াছি), তাই এই পুষ্পগুলি আমি কর্দমদ্বারা নষ্ট করিয়া ফেলিতে পারি। তুমি আমাকে এই জলে ধুইয়া করণ্ডকে রাখ। তাহা হইলে এই পুষ্পগুলি বিনষ্ট হইবে না"। তখন সেই মালাকার বলিল—"এই কচ্ছপটি বেশ ত সুন্দর! যাই, ইহাকে এই জলে ধুইয়া আনি। তাহা হইলে পুষ্পগুলি আর কর্দমদ্বারা নষ্ট হইবে না"। সেই (কচ্ছপ) পৈতৃক জলপ্রদেশে তাহার শুণ্ডিকা বা গলদেশটি সহ পাঁচটি অঙ্গ প্রসারিত করিয়া সেই মালাকারের হস্ত হইতে ভ্রষ্ট হইয়া গেল। সেই (নদীর) জলমধ্যে প্রবিষ্ট হইয়া সেই নদীর অদূরে তটের উপর উদিত হইয়া সেই মালাকারকে গাথাদ্বারা বলিল—

(২৪৫) "পারিপাত্রী নদী নির্মল—কিন্তু, আমি ইহার কূলে যথাশক্তি নিজেকে কর্ষণ বা ঘর্ষণ করায় কর্দমলিপ্ত হইয়াছি। হে মালিক (মালাকার)! আমাকে ধুইয়া পেটিকায় প্রক্ষেপ কর"॥১॥

অনন্তর, হে ভিক্ষুগণ! সেই মালাকার কচ্ছপকে গাথাদ্বারা উত্তরে বলিল—
"রাজা আমার উপর বহু (ধন) সঞ্চিত করিয়াছেন; আমি বহু ত্রিগণ (ধর্ম, অর্থ ও কাম বিষয়ক বস্তু) লাভ করিয়াছি। হে ভদ্র কচ্ছপ! সেই মালাদ্বারা রচিত করণ্ডকে তুমি সুখ অনুভব করিবে"॥২॥
অনন্তর, হে ভিক্ষুগণ! সেই কচ্ছপ সেই মালাকারকে গাথাদ্বারা বলিল—

बहुका तव संचितासु राज्ञा त्रिगणो बहुको समागतो ।।
मत्तो प्रलपसि मालिक तैले भुंजथ भद्रकच्छपं ।।३।।

भगवानाह। स्यात् खलु भिक्षवः पुनर्युष्माकं एवमस्यादन्यः स तेन कालेन तेन समयेन भद्रकच्छपो अभूषि। नैतदेवं द्रष्टव्यं। तत् कस्य हेतोः। अहं सो भिक्षवः तेन कालेन तेन समयेन कच्छपो अभूषि। अन्यः स तेन कालेन तेन समयेन मालाकारो अभूषि। न खल्वेतदेवं द्रष्टव्यं। तत् कस्य हेतोः। एषो सो भिक्षवो मारो पापीयां तेन कालेन तेन समयेन सो मालाकारो अभूषि। तदापि अहं एतस्य मालाकारस्य हस्तातो बुद्धिविशेषेण मुक्तो। एतरहिं पि अहं एतस्य मारस्य विषयातो बुद्धिविशेषेण मुक्तो।

समाप्तं कच्छपजातकं।

अपि च न भिक्षवः एतरहिं एव एतस्य विषयातो मुक्तो अन्यदाप्यहं एतस्य हस्त(२४६)गतोविषयातो प्रमुक्तो। भिक्षू आहन्सुः। अन्यदापि भगवन्। भगवानाह। अन्यदापि भिक्षवः।

भूतपूर्वं भिक्षवो अतीतमध्वाने समुद्रकूले महावनखण्डं नानावनषण्डेहि

---

"রাজা তোমার উপর বহু (ধন) সঞ্চিত করিয়াছেন; তুমি বহু ত্রিগণ (ধর্ম, অর্থ ও কামবিষয়ক বস্তু) লাভ করিয়াছ। তুমি মত্ত ব্যক্তির ন্যায় প্রলাপ করিতেছ। হে মালাকার! তুমি ভদ্রকচ্ছপকে তৈলে (ভাজিয়া) আহার কর"॥৩॥

ভগবান্ বলিলেন—হে ভিক্ষুগণ! এমন হইতে পারে যে, তোমাদের মনে এই ভাব উদিত হইতে পারে যে, সেই কালে সেই সময়ে ভদ্রকচ্ছপটি অন্য কেহ ছিল। তোমরা এই বিষয়টি এরূপে ভাবিও না। ইহা কি কারণে? হে ভিক্ষুগণ! সেই কালে সেই সময়ে আমিই সেই কচ্ছপ ছিলাম। (তোমরা এরূপই ভাবিতে পার যে,) সেই কালে সেই সময়ে সেই মালাকার অন্য কেহ ছিল। তোমরা কখনই এইরূপ মনে করিও না। ইহা কি কারণে? হে ভিক্ষুগণ! পাপিষ্ঠ মারই সেই কালে সেই সময়ে সেই মালাকার ছিল। তখনও আমি এই মালাকারের হস্ত হইতে বুদ্ধি-বৈশিষ্ট্যদ্বারা মুক্ত হইয়াছিলাম—এখনও আমি এই মারের বিষয় (অধিকার বা রাজ্য) হইতে বুদ্ধিবৈশিষ্ট্যদ্বারা মুক্ত হইয়াছি।

কচ্ছপজাতক সমাপ্ত।

হে ভিক্ষুগণ! আরও (দেখ)—এইবারই যে আমি ইহার অধিকার হইতে মুক্ত হইয়াছি তাহা নহে; অন্য একসময়েও আমি ইহার হস্তগত হইয়া (২৪৬) ইহার অধিকার হইতে প্রমুক্ত হইয়াছি। ভিক্ষুগণ বলিলেন—হে ভগবন্! অন্য এক-সময়েও? ভগবান্ বলিলেন—ভিক্ষুগণ অন্য একসময়েও।

হে ভিক্ষুগণ! বহুপূর্বে এক অতীত সময়ে সমুদ্রকূলে এক মহাবনখণ্ড

नानावर्णेहि वृक्षेहि पुष्पफलोपेतेहि उदुम्बरबहुलेहि उपशोभितं। तहि वानरो महान्तस्य वानरयूथस्य यूथपतिः। सो तत्र वनषण्डे तेन वानरयूथेन सार्धं प्रतिवसति शान्ते प्रविविक्ते बहुमृगपक्षिशतेहि निषेविते निर्मनुष्यचरिते। सो च वानराधिपो तहि समुद्रकूले महान्ते उदुम्बरवनवृक्षे शाखापलाशबहुले उदुम्बराणि भक्षयति। ततो च समुद्रातो महान्तो शुशुमारो तं प्रदेशमागतो। स तत्र समुद्रतीरे आसति। तेन वानराधिपेन दृष्टो। तस्य शुशुमारं दृष्ट्वा कारुण्यं संजातं। कुत्र व तेषां जलचराणां समुद्रमध्ये पुष्पा वा फलो वा। य नूनमस्य इतोहं उदुम्बरफलानि ददेहं। सो दानि तस्य ततो उदुम्बर वृक्षातो बहुबहूनि उदुम्बराणि पक्वाणि वर्णसंपन्नानि रससंपन्नानि अग्रतो पातेति निपतितनिपतितानि च उदुम्बराणि भक्षयति। एवं शुशुमारो पुन-पुनो तं प्रदेशं तस्य वानरस्य समीपं आगच्छति। सो तस्य वानराधिपो आगतागतस्य वृक्षातो उदुम्बराणि पातेति। ते दानि उभये वानरो च शुशुमारो च परस्परस्य प्रियमाणा संजाता। तस्यापि दानि शुशुमारस्य भार्या त स्वामिं अपश्यन्ती उत्कण्ठयति। भवितव्य मम स्वामिकेन अन्या शुशुमारी प्रगृहीता। ततः सो मम मूलातो गत्वा

---

ছিল—ইহা নানাবনখণ্ড, নানাবর্ণের পুষ্পফলযুক্ত ও উদুম্বরবহুল বৃক্ষসমূহ দ্বারা উপশোভিত ছিল। সেখানে মহান্ (প্রকাণ্ড) বানরযূথের দলপতিরূপে এক বানর ছিল। *(এই বানরটি)* সেই বানরদলের সহিত সেই শান্ত, নির্জন, বহুমৃগ ও পক্ষী-দ্বারা অধ্যুষিত, মানুষের গতাগতিবিহীন বনখণ্ডে বাস করিত। আবার সেই বানরপতি সমুদ্রকূলস্থ সেই শাখাপত্রবহুল উদুম্বরবনের এক বৃক্ষে উদুম্বরসমূহ (ডুমুরসমূহ) ভক্ষণ করিয়া থাকে। আবার সেই সমুদ্র হইতে এক প্রকাণ্ড শিশুমার (জলজন্তুবিশেষ) সেই প্রদেশে আসিয়াছিল। সে সেই সমুদ্রতীরে আসিয়া রহিল। সেই বানরপতি তাহাকে দেখিল। শিশুমারকে দেখিয়া তাহার করুণা হইল—সমুদ্রমধ্যে কোথায় সেই জলচর জন্তুরা পুষ্প ও ফল পাইবে? নিশ্চিতই যদি আমি এই স্থান হইতে ইহাকে উদুম্বরফল দিতে পারি তবে কেমন হয়?" তখন সে সেই উদুম্বর বৃক্ষ হইতে বড় বড় পক্ব, বর্ণযুক্ত ও রসযুক্ত উদুম্বরসমূহ তাহার (শিশুমারের) কাছে ফেলিতে লাগিল এবং সে-ও (সেই) পুনঃ পুনঃ নিপতিত উদুম্বরসমূহ ভক্ষণ করিতে লাগিল। এইভাবে সেই শিশুমার বার বার সেই প্রদেশে সেই বানরের নিকট আসিতে লাগিল। সেই বানরপতিও বার বার তাহার (শিশুমারের) জন্য বৃক্ষ হইতে উদুম্বরসমূহ ফেলিতে থাকিত। তখন সেই বানর ও শিশুমার উভয়ে পরস্পরের প্রতি প্রিয়মাণ হইয়া পড়িল। তখন সেই শিশুমারের স্ত্রী সেই স্বামীকে না দেখিতে পাইয়া উৎকণ্ঠিত হইল। (সে ভাবিল—) "এমনও হইতে পারে যে আমার স্বামী অন্য এক শিশুমারীকে (স্ত্রীতে) গ্রহণ করিয়া থাকিবে। তাই সে আমার নিকট হইতে যাইয়া তাহার সঙ্গে বাস করিতেছে" তারপর সে

ताये सार्धं आसति। सा दानि तं स्वामिकं पृच्छति। कहिं त्वं मम मूलातो गत्वा आससि। सो तामाह्। समुद्रतीरे अमुकस्मिं उद्देशे महावनखण्डे तत्र मम वानरो मित्रो (२४७) तेन सह आलापसंलापेन आसामि। तस्या दानि शुशुमारीये एतदभूषि। याव सो वानरो जीविष्यति तावदेषो मम स्वामि तहिं गत्वा वानरेण सार्धं आलापेन आसिष्यति। ततो तं वानरं मारापेमि तेन च मारितेन एषो मे स्वामिको न भूयो तं प्रदेशं गमिष्यति। सा दानि शुशुमारी ग्लानकं कृत्वा आसति। सो तां शुशुमारो पृच्छति। भद्रे किं ते कृत्यं किं ते दुःखं किं ते अभिप्रेतं आख्याहि किं ते देमि आणपेहि। सा नं आह्। आर्यपुत्र मर्कटहृदयस्य मे दोहदो। यदि मर्कटस्य हृदयं लभामि एवं जीवेयं अथ न लभामि नास्ति मे जीवितं। सो तां आह्। प्रसादं करोहि कुतो इह समुद्रे मर्कटस्य प्रचारो यदि अन्यस्मिं अभिप्रायो जलचरे तव उपस्थपेमि। सा दानि आह्। न मे अन्यत्र अभिप्रायो मर्कटहृदये अभिप्रायो तन्मे उपस्थपेसि यदि इच्छसि मे जीवन्तीं। सो तां पुनःपुनो संज्ञपति। प्रसीदाहि भद्रे कुतो इह उदकमध्ये मर्कटो। सा दानि (आह्)। यो सो तव समुद्रकूले मर्कटो वयस्योस्य वयस्यस्य हृदयं आनेहि।

---

তাহার সেই স্বামীকে জিজ্ঞাসা করিল—"তুমি আমার নিকট হইতে যাইয়া কোথায় বাস কর?" সে বলিল—"সমুদ্রতীরে অমুক স্থানে সেই মহাবনখণ্ডে আমার বানর মিত্র আছে (২৪৭), তাহার সহিত কথাবার্তাদ্বারা আমি (সেখানে) থাকি"। তখন সেই শিশুমারীর এই কথা মনে হইল—"যতদিন সেই বানর বাঁচিয়া থাকিবে ততদিন এই আমার স্বামী সেখানে যাইয়া বানরের সঙ্গে আলাপদ্বারা (সেখানে) থাকিবে। তাই আমি সেই বানরকে মারাইব এবং সে মারিত হইলে আর আমার এই স্বামী পুনরায় সেই প্রদেশে যাইবে না"। তখন সেই শিশুমারী পীড়ার ভাণ করিয়া রহিল। সে সেই শিশুমারীকে জিজ্ঞাসা করিল—"তোমার জন্য করণীয় কি আছে? তোমার দুঃখ (কষ্ট) কি? তোমার কি অভিপ্রেত বস্তু তাহা বল, কি তোমাকে দিতে পারি আজ্ঞা কর"। সে তাহাকে বলিল—"আর্যপুত্র! মর্কটের (বানরের) হৃদয়ে (হৃৎপিণ্ডে) আমার দোহদ (বা অভিলাষ) হইয়াছে। যদি বানরের হৃৎপিণ্ড লাভ করিতে পারি, তো জীবন রাখিতে পারিব; আর যদি (তাহা) না পাই, (তবে) আমার জীবনও থাকিবে না"। সে তাহাকে (স্ত্রীকে) বলিল—"তুমি প্রসন্ন হও—কি প্রকারে এই সমুদ্রে মর্কটের প্রচার (চলাফিরা) সম্ভবপর হইবে; যদি অন্য কোন জলচর জীবে তোমার অভিপ্রায় হয়, তবে আমি তাহা উপস্থাপিত করিতে পারি"। তখন সে বলিল—"অন্য কোন জীবে আমার অভিপ্রায় নাই, মর্কটের হৃৎপিণ্ডে আমার অভিপ্রায় হইয়াছে, তুমি আমাকে তাহা আনিয়া দেও যদি আমাকে জীবমান দেখিতে ইচ্ছা কর"। সে পুনঃ পুনঃ তাহাকে বুঝাইতে চেষ্টা করিল—"হে ভদ্রে! প্রসন্ন হও, কি প্রকারে এই জলমধ্যে মর্কট পাওয়া যাইবে"? সে তখন (বলিল)—"সমুদ্রকূলে সেই যে তোমার মর্কট বয়স্য আছে, সেই বয়স্যের হৃৎপিণ্ড আনিয়া দেও"।

सो आह। प्रसादं करोहि सो मर्कटो मम वयस्यो च मित्रो च कथं अहं शक्यामि तस्य हृदयमुत्पाटयितु। सा दानि आह। यदि न शक्नोसि मम मर्कटहृदय-मुपस्थपयितु नास्ति मे जीवित। सो दानि शुशुमारो ताये शुशुमारीये सुष्ठु उपगृहीतो समानो आह। अहं जलचरो सो च मर्कटो स्थलचरो च वनचरो च यत्र चरति तत्र मम अगति। तत् कथं अहं शक्यामि तस्य मर्कटस्य हृदयमानयितु। यथोक्तं पण्डितेहि।

शत माया क्षत्रियाणा ब्राह्मणाना दुवे शते।
सहस्र माया राजाना स्त्रीणा माया अनन्तिका इति ॥१॥

(২৪৮) सा दानि तस्य शुशुमारस्य आह। एते वानरा फलभक्षा फल-लोला, तस्य वानरस्य जल्पाहि। वयस्य एत्थ समुद्रपारे नानावर्णानि वृक्षाणि नानाप्रकाराणि पुष्पफलपिण्डभारभरितानि आम्राणि जम्बूनि च पनसानि भव्यानि च पालेवतानि च क्षीरकानि च तिन्दुकानि पिप्पलानि च। आगच्छ तत्र त्वा नेष्य, नानाप्रकाराणि फलाणि परिभुजिष्यसि। ततो यदा तव हस्तगतो भवेय ततो त मारित्वा हृदय आनेसि। तेन दानि शुशुमारेण अभ्युपगत। आनेष्य तस्य मर्कटस्य हृदय, प्रीता भवाहि, न भूयो उत्कण्ठ करोहि मा परितप्यासि।

---

সে বলিল—"আমার প্রতি প্রসাদ বা অনুগ্রহ দেখাও;" সেই মর্কট আমার বয়স্য ও মিত্র, কেমন করিয়া আমি তাহার হৃৎপিণ্ড উৎপাটিত করিতে পারি?" সে তখন বলিল—"যদি তুমি আমাকে মর্কটের হৃৎপিণ্ড না আনিয়া দিতে পার, তবে আমার জীবন থাকিবে না"। তখন সেই শিশুমার সুষ্ঠুভাবে সেই শিশুমারীর বশীভূত থাকায় বলিল—"আমি জলচর জন্তু, সেই মর্কট স্থলচর ও বনচর জন্তু—সে যেখানে চরে সেখানে আমার গতি নাই। অতএব, কেমনে আমি সেই মর্কটের হৃৎপিণ্ড আনিতে পারিব"? পণ্ডিতেরা সেরূপ বলিয়া থাকেন—

ক্ষত্রিয়দিগের মায়া বা ছলনা শতপ্রকারের, ব্রাহ্মণদিগের দুইশত প্রকারের, রাজাদিগের সহস্রপ্রকারের, (কিন্তু) স্ত্রীলোকদিগের মায়া বা ছলনা অনন্তরকমের হইয়া থাকে॥ ১॥

(২৪৮) তৎপর সেই (শিশুমারী) সেই শিশুমারকে বলিল—"এই বানরেরা ফলভক্ষণকারী ও ফললোলুপ; তুমি সেই বানরকে বল—হে বয়স্য! এই সমুদ্রের (অপর পারে) নানাবর্ণবিশিষ্ট নানাপ্রকার বৃক্ষসমূহ রহিয়াছে এবং সেগুলি পুষ্প ও ফলসমূহের ভারে ভরিত আছে, যথা আম্র, জম্বু, পনস (কাঁঠাল), ভব্য, পালেবত, ক্ষীরক, তিন্দুক ও পিপ্পল বৃক্ষ। এস, তোমাকে আমি সেখানে নিয়া যাইব, তুমি নানাপ্রকার ফল খাইতে পারিবে'। তারপর যখন সে তোমার হস্তগত হইবে তখন তুমি তাহাকে মারিয়া (তাহার) হৃৎপিণ্ড আনিতে পারিবে"। তখন সেই শিশুমার (এই কথা) স্বীকার করিয়া নিল (এবং বলিল)—"আমি সেই মর্কটের হৃৎপিণ্ড

सो दानि शुशुमारो तां भार्या च आश्वासेत्वा तं प्रदेशं गतो यहिं सो वन-
षण्डे वानराधिपो प्रतिवसति। सो दानि तेन वानराधिपेन शुशुमारो दृष्टो।
सो दानि वानरो तं दृष्ट्वा शुशुमारं प्रतिमोदित्वा पृच्छति। वयस्य किं दानि
सुचिरेण आगतो अस्माकमवलोकयितुं, किं क्षेमं, मा वा किंचित् शरीरपीड़ा
आसि। सो दानि आह्। वयस्य क्षेमं च, न च किंचि शरीरपीड़ा आसि अपि
मे समुद्रपारं गत्वा आगत्वा। सो तं पृच्छति कीदृशं समुद्रपारं भवति। शुशुमार
आह्। वयस्य रमणीयं समुद्रपारं नानाप्रकारेहि वृक्षसहस्रेहि पुण्यफलोपेतेहि
उपशोभितं आम्रेहि च जंबूहि च पनसेहि च भव्येहि च पालेवतेहि उपशोभितं
मातुलुंगेहि तिन्दुकेहि च पियालेहि च मधुकेहि च क्षीरिकेहि च अन्येहि च फल-
जातीहि येषामिह प्रचारो नास्ति। यदि तव अभिप्रायो आगच्छ नानाप्रकाराणि
फलानि परिभोक्तुं तहिं गम्यते। तस्य दानि वानरस्य फलभुक्तस्य फललोलस्य
नानाप्रकाराणि फलानि श्रुत्वा तहिं समुद्रपारे गमनबुद्धी उत्पन्ना। सो दानि तं
शुशुमारमाह्। (२४६) स्थलचरो कथं शक्येया समुद्रपारं गन्तु। शुशुमारो आह्।
अहं ते नेष्यामि मम इह ग्रीवायामारुह्य उपशेहि उभयेहि च हस्तेहि कर्करीय

---

আনিয়া দিব, তুমি প্রীত হও, পুনরায় উৎকণ্ঠা ভোগ করিও না—যেন (শেষে) পরিতাপ ভোগ না কর"।

তৎপর সেই শিশুমার সেই ভার্যাকে আশ্বাসিত করিয়া সেই প্রদেশে গেল, যেখানে সেই বানররাজ বনখণ্ডে বাস করে। তখন সেই বানররাজ শিশুমারকে দেখিতে পাইল। তখন সেই বানর সেই শিশুমারকে দেখিয়া অভ্যর্থনা জানাইয়া (তাহাকে) জিজ্ঞাসা করিল—"বয়স্য! এখন তুমি কেন এতকাল পরে আমাদিগকে দেখিতে আসিয়াছ? তোমাদের মঙ্গল ত? কোনপ্রকার শরীর পীড়া হয় নাই ত?

সে তখন বলিল—"বয়স্য! আমার মঙ্গল এবং সমুদ্রের অপর পারে যাইয়া আসিয়া আমার কোন শরীরপীড়া হয় নাই"। সে (বানর) তাহাকে জিজ্ঞাসা করিল—"সমুদ্রের অপর পারটি কিপ্রকার"? শিশুমার বলিল—"বয়স্য! সমুদ্রের অপর পার রমণীয় এবং ইহা নানাপ্রকার সহস্র সহস্র উত্তমফলবিশিষ্ট বৃক্ষদ্বারা উপশোভিত, যথা আম্র, জম্বু, পনস, ভব্য, পালেবত, তিন্দুক, পিয়াল, মধুক, ক্ষীরিক ও অন্যান্য ফলযুক্ত বৃক্ষদ্বারা উপশোভিত—যে-সব ফলের প্রচার এইস্থানে নাই। যদি তোমার অভিপ্রায় হয়, তবে এস, নানাপ্রকার ফল পরিভোগ করিবার জন্যে সেখানে যাইবে"। তখন সেই ফলভোজনকারী ফললোলুপ বানরের মনে নানাপ্রকার ফলের কথা শুনিয়া সমুদ্রের সেই অপর পারে যাওয়ার বুদ্ধি উৎপন্ন হইল। সে তখন সেই শিশুমারকে বলিল (২৪৬) "আমি স্থলচর জন্তু—কিপ্রকারে আমি সমুদ্রের অপর পারে যাইতে পারিব"? শিশুমার (তাহাকে) বলিল—"আমি তোমাকে (সেখানে) নিয়া যাইব, তুমি আমার এই গ্রীবাদেশে আরোহণ করিয়া শয়ন করিয়া থাক এবং উভয়

लग्नेहि। सो दानि वानरो आह। एव भवतु गच्छामि यदि मनेसि। सो दानि शुशुमारो आह। ओतराहि अह ते नेमि। सो दानि वानरो उदुम्बरातो ओतरित्वा शुशुमारस्य ग्रीवायामारुह्य उभयेहि हस्तेहि कर्करीय लग्नो। सो दानि शुशुमारो त वानर गृहीत्वा समुद्र प्रतीर्णो नातिदूरे समुद्रस्य त वानर उदके चालेति। सो त वानरो आह। वयस्य कि दानि मे उदके चालेसि। सो न आह। वयस्य न जानासि कस्यार्थाय मया त्वमानीतो। तस्य मे वयस्यीये मर्कटहृदयस्य दोहृदो। ततो मर्कटस्य हृदयस्यार्थाय त्व मया आनीतो। सा मे वयस्य भार्या तव हृदय खादिष्यति। एव त्व मया आनीतो। सो दानि वानरो आह। वयस्य मम हृदयो उदुम्बरे उत्कण्ठितो स्थपितो यथा लहुकतरो समुद्र तरेय, न च अतिभारो भवेयाति। तद्यदि ते अवश्य मर्कटहृदयेन कार्यं ततो निवर्ताम ततो उदुम्बरातो त मर्कटहृदय ओतारियान दास्यामि। तस्य दानि मर्कटस्य यथाजल्पन्तस्य तेन शुशुमारेण पत्तीयित। सो दानि शुशुमारो त गृह्णीय तहि प्रतिनिवृत्तो क्षणान्तरेण वनखण्डप्रत्युद्देशमनुप्राप्तो। ततो वानरो तस्य शुशुमारस्य ग्रीवातो उप्फारित्वा त उदुम्बर प्रक्रान्तो। सो दानि शुशुमारो आह। वयस्य ओतराहि

---

হস্ত আমার কর্করীতে (ছিদ্রবহুল জলঘটের ন্যায় আকৃতিবিশিষ্ট অস্থিভাগে?) লাগাইয়া রাখ"। তখন সেই বানর বলিল—'সেইরূপই হউক, আমি যাইব—যদি তুমি (ভাল) মনে কর"। সেই শিশুমার তখন বলিল—"তুমি (বৃক্ষ হইতে) নামিয়া পড়, আমি তোমাকে লইয়া যাইব"। তারপর সেই বানর উদুম্বর বৃক্ষ হইতে অবতরণ করিয়া সেই শিশুমারের গ্রীবাদেশে আরোহণ করিয়া উভয় হস্তদ্বারা ইহার কর্করীতে লগ্ন হইয়া রহিল। তখন সেই শিশুমার সেই বানরকে লইয়া সমুদ্র পার হইবার সময়ে সমুদ্রের অল্পদূরে যাইয়া সেই বানরকে জলে চালিত করিল। সেই বানর তাহাকে বলিল—"বয়স্য! এখন তুমি আমাকে জলে ফেলিতেছ"? সে (শিশুমার) তাহাকে বলিল—"বয়স্য! তুমি জান না কি উদ্দেশ্যে আমি তোমাকে আনিয়াছি। সেই আমার বয়স্যার (স্ত্রীর) বানরের হৃৎপিণ্ডে অভিলাষ হইয়াছে। তাই মর্কটের হৃৎপিণ্ডের প্রয়োজনে আমি তোমাকে আনিয়াছি। হে বয়স্য! আমার সেই ভার্যা তোমার হৃৎপিণ্ড খাইবে। এই জন্যই আমি তোমাকে আনিয়াছি। তখন সেই বানর বলিল—"বয়স্য! আমি আমার হৃৎপিণ্ডটি কণ্ঠ হইতে বাহির করিয়া উদুম্বর বৃক্ষে রাখিয়া আসিয়াছি, যেন আমি (ওজনে) লঘুতর হইয়া সমুদ্র তরিতে পারি এবং (তোমার পক্ষে) আমি যেন অতিভারবিশিষ্ট না হইয়া পড়ি। তাই যদি তোমার অবশ্যই মর্কটহৃৎপিণ্ডের দ্বারা কোন কার্য থাকে, তবে আমরা ফিরিয়া যাইব এবং সেই উদুম্বর বৃক্ষ হইতে আমি মর্কটহৃৎপিণ্ড নামাইয়া দিব'। তখন সেইরূপ কথনকারী বানরের কথাতে সেই শিশুমারের বিশ্বাস ঘটিল। তার পর সেই শিশুমার তাহাকে লইয়া ফিরিয়া ক্ষণকালমধ্যে সেই বনখণ্ডপ্রদেশে উপস্থিত হইল। তখন বানর সেই শিশুমারের গ্রীবাদেশ হইতে লম্ফ প্রদান করিয়া সেই উদুম্বর বৃক্ষে উঠিয়া পড়িল।

एतं अतो उदुम्बरातो हृदयं गृह्णीय। अथ खलु भिक्षवः सो वानरो तं शुशुमारं गाथाभिरध्यभाषे।

वट्टो(ड्डो) च वृद्धो च होसि प्रज्ञा च ते न विद्यते।
न तुव बाल जानासि नास्ति अहृदयो क्वचि ॥१॥
(२५०) प्रत्युत्पन्नेषु कार्येषु गुह्यमर्थं न प्रकाशयेत्।
लभन्ति पण्डिता बुद्धिं जलमध्ये व वानरः ॥२॥
अलमेतेहि आम्रेहि जंबूहि पनसेहि च।
यानि पारे समुद्रस्य अयं पक्वो उदुम्बरो ॥३॥

भगवानाह। स्यात् खलु भिक्षवः युष्माकमेवमस्यादन्यः स तेन कालेन तेन समयेन समुद्रतीरे वनखण्डनिवासी वानरो अभूषि। न खल्वेतदेवं द्रष्टव्यं। तत् कस्य हेतोः। अहं सो भिक्षवः तेन कालेन तेन समयेन समुद्रतीरे वनषण्ड-निवासी वानरो अभूषि। अन्यः स तेन कालेन तेन समयेन महासमुद्रे शुशुमारो अभूषि। ने खल्वेतदेव द्रष्टव्यं। तत् कस्य हेतोः। एषो सो मारो पापीया तेन कालेन तेन समयेन महासमुद्रे शुशुमारो अभूषि। तदाप्यहं एतस्य हस्तगतो

---

তখন সেই শিশুমার বলিল—"বয়স্য! এই উদুম্বর বৃক্ষ হইতে হৃৎপিণ্ড লইয়া এখানে নামিয়া আস"। হে ভিক্ষুগণ! তৎপর সেই বানর গাথাসমূহদ্বারা সেই শিশুমারকে বলিতে লাগিল—

"তুমি পরিপুষ্ট ও বৃদ্ধ (পরিণত) হইয়াছ, (কিন্তু,) তোমার প্রজ্ঞা (প্রকৃষ্ট জ্ঞান) নাই। হে মূর্খ! তুমি জান না যে, কোথাও কেহ হৃৎপিণ্ডশূন্য হইয়া থাকিতে পারে না"॥ ১॥

(২৫০) "উপস্থিত কার্যসমূহে কেহই গুহ্য (গোপনীয়) বিষয় প্রকাশ করিবে না। জলমধ্যে (গত) বানরের ন্যায় পণ্ডিতগণ বুদ্ধি লাভ করিবেন"॥ ২॥

"এই-সব আম্র, জম্বু ও পনসবৃক্ষদ্বারা আমার প্রয়োজন নাই, যে-সব বৃক্ষ সমুদ্রের অপর পারে অবস্থিত; এই পক্বফলবিশিষ্ট উদুম্বরবৃক্ষই (আমার যথেষ্ট হইবে)"॥ ৩॥

ভগবান্ (বুদ্ধ) বলিলেন—হে ভিক্ষুগণ! এমন হইতে পারে যে, তোমাদের মনে এই ভাব উদিত হইতে পারে যে, সেই কালে সেই সময়ে সমুদ্রতীরস্থ বনখণ্ডে নিবাসকারী বানরটি অন্য কেহ ছিল। তোমরা, কিন্তু, এই বিষয়টি এরূপ ভাবিও না। ইহা কি কারণে? হে ভিক্ষুগণ! সেই কালে সেই সময়ে আমিই সেই সমুদ্র-তীরের বনখণ্ডনিবাসী বানর ছিলাম। (তোমরা এরূপও ভাবিতে পার যে,) সেই কালে সেই সময়ে মহাসমুদ্রের সেই শিশুমার অন্য কেহ ছিল। তোমরা, কিন্তু, ইহা এইরূপ ভাবিও না। তাহা কি কারণে? সেই কালে সেই সময়ে এই সেই মারই মহাসমুদ্রের শিশুমার ছিল। তখনও আমি ইহার হস্তগত হইয়া ইহার বশে পড়িয়া

वशगतो बुद्धिविशेषेण विषयातो अतिक्रान्तो एतरहिं पि एतस्य अहं मारस्य पापीमतो विषयातो अतिक्रान्तो।

समाप्त मर्कटजातकं।

भिक्षू भगवन्तमाहन्सुः! पश्य भगवन् कथमयं मारो पापीमा भगवतो तपोवने दुष्करचारिका चरन्तस्य पृष्ठतो अनुबद्धो ओतारार्थी ओतारगवेषी अलभन्तो च ओतारं निर्विद्य प्रत्यवक्रान्तो। भगवानाह। न भिक्षवः एतरहिं एव एषो मारो पापीमां पृष्ठतोनुपृष्ठतो समनुबद्धो ओतारार्थी ओतारगवेषी अलभन्तो च ओतारं निर्विद्य प्रत्यवक्रान्तो। भिक्षू भगवन्तमाहन्सुः। अन्यदापि हि भगवं। भगवानाह। अन्यदापि भिक्षवो।

भूतपूर्वं भिक्षवो अतीतमध्वानं नगरे वाराणसी काशिजनपदे शाकु-(२५१)-न्तिकेन अरण्यायतने शकुन्तकानामर्थाये कालपाशा ओड्डिता निवापो प्रकीर्णो। ततः एकान्तं गत्वा तेषां पाशाना दर्शनपथे आसति। तहिं च अपरो शकुन्तको पण्डितजातिको अरण्यायतने महान्तं शकुन्तकयूथं परिहरति। तस्य शकुन्तस्य यूथपतिस्य बुद्धिविशेषेण त शकुन्तकयूथं वर्धति न परिहीयति। स तेषा शकुन्त-

---

(নিজের) বুদ্ধিবিশেষদ্বারা তাহার অধিকার হইতে অতিক্রান্ত হইয়াছিলাম, এখনও আমি এই পাপিষ্ঠ মারের অধিকার হইতে অতিক্রান্ত হইয়াছি।

মর্কটজাতক সমাপ্ত॥

ভিক্ষুগণ ভগবান্ (বুদ্ধকে) জিজ্ঞাসা করিলেন—"হে ভগবন্! দেখুন কিভাবে এই পাপিষ্ঠ মার তপোবনে দুষ্কর তপস্যার আচরণকারী ভগবানের পৃষ্ঠদেশে (পশ্চাদ্ভাগে) লাগিয়া (আক্রমণের) অবসরার্থী ও অবসরের অন্বেষণপর হইয়া অবতার (বা আক্রমণের অবসর) না পাইয়া দুঃখিত হইয়া ফিরিয়া গিয়াছে"। ভগবান্ বলিলেন—"হে ভিক্ষুগণ! এইবারই যে এই পাপিষ্ঠ মার (আমার) পশ্চাৎ পশ্চাৎ অনুসরণ করিয়া অবসরার্থী ও অবসরান্বেষণপর হইয়া, অবসর না পাইয়া দুঃখিত হইয়া ফিরিয়া গিয়াছে তাহা নহে"। ভিক্ষুগণ ভগবানকে জিজ্ঞাসা করিলেন—"হে ভগবন্! অন্য সময়েও"? ভগবান্ বলিলেন—"হে ভিক্ষুগণ! অন্য সময়েও"।

হে ভিক্ষুগণ! বহুপূর্বে, অনেক কাল অতীত হইয়া গিয়াছে, কাশিজনপদে বারাণসী নগরে এক শাকুনিক (২৫১) বিস্তৃত অরণ্যমধ্যে শকুন্তকগণের (পাখিগণের) উদ্দেশ্যে মৃত্যুপাশসমূহ বিস্তারিত করিয়া রাখিয়া, নিবাপ (শস্য) বিক্ষেপ করিয়া রাখিয়াছে। তৎপর (সে) একান্তস্থানে যাইয়া সেই পাশগুলির দর্শনপথে বসিয়া থাকিত। সেই অরণ্যায়তনে একটি পণ্ডিতজাতীয় পক্ষী এক প্রকাণ্ড পক্ষিদলের পরিপালন (রক্ষা) করিত। সেই দলপতি পক্ষীর বুদ্ধিবৈশিষ্ট্যহেতু সেই পক্ষীর দল বৃদ্ধি পাইতে লাগিল—কমিয়া গেল না। সে (পক্ষী) সেই পাখিগণকে শাকুনিকদিগের

